अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३१ वर्षे द्वितीयोऽङ्कः ( अप्रैलमासाङ्कः ) २००६ ई०

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३१ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २००६ ई०

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनु-सन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

अप्रकाशितानां दुर्लभानां प्राचीनचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट, पोस्टल आर्डर अथवा मनीआर्डर) द्वारा प्रेषणीयः।

पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

श्रावणपूर्णिमायाः रक्षाबन्धनपर्वेदं न केवलं मन्त्रविशेषेण प्रकोष्ठे रक्षासूत्रवेष्टनेन चरितार्थं भवति न वा संस्कृतदिवसमुपलक्षीकृत्य संस्कृतप्रचारगानमात्रेण परिपूर्णतां याति अपितु तादृशं किमपि भारतीयसंस्कृतेः अक्षय्यमेकतासूत्रं प्रति जागरूकं करोति, तद्रक्षणाय सङ्कल्पवचांसि ग्राहयति। अद्यप्रभृत्येवारभ्यते स्म वेदादौ प्रविविक्षूणां विनेयानां व्रतनियमविशेषोपदेशमुखेन **"स्वाध्यायोऽध्येतव्यः"** इत्यध्ययनविधेः परिपालनम्। यदर्थं प्रावर्तत मनोरिदं वचनम्–

**श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि।**
**युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्।।**

इदं शास्त्रसंरक्षणव्रतं न केवलमिष्टप्राप्त्यर्थमनिष्टनिवारणपर्यन्तमेव, अपितु सतः उत्कर्षाधानाय यावज्जीवनमनुष्ठानाय दीक्षाग्रहणम्। यदा हि तीर्थभूतानां गुरुजनानां सन्निधौ अनुदिनलुप्यमानशास्त्र-संरक्षणसङ्कल्पग्रहणेन एव उत्सवस्य साफल्यं स्यात्, तदैव च भवभूतिप्रोक्तवचनानुरूपं सुरभारतीमुखोल्लासेन जीवितं कृतार्थं स्यात्–

**समयः स वर्तत इवैष यत्र मां**
**समनन्दयत् सुमुखि गौतमार्पितः।**
**अयमागृहीतकमनीयकङ्कण-**
**स्तव मूर्तिमानिव महोत्सवः करः।। ( उ.रा. १-१८ )**

षू प्रेरणे धातोर्निष्पन्नोऽयम् उत्सवो न केवलं नियताह्लादजनकव्यापारः, उत्कृष्टः सवः, यज्ञादपि उत्कृष्टो वा भवति, अपितु उत्सं मूलं वाति वमति गमयति निर्दिशति वा, यश्च अस्मान् उत्सेन सम्बद्धं करोति, स्वपरम्परया च अनुबध्नाति। अतस्तदानीमेव उत्सवस्य उत्सवत्वं फलेग्रहिः स्यात् यदा पूर्वाचार्यसुरक्षितां पूज्यजनानां क्रमेण प्राप्तां दायादभूतां सकलविद्यानामुत्सभूतां भारतीम् अभिनवदृष्ट्या समाराधयितुं दृढतरं सङ्कल्पं कुर्याम। अवसरोऽयम् एतदर्थं सङ्कल्पस्य, सङ्कल्पितस्य च स्वकृत्यस्य निष्ठया परिपालनस्य।

विदन्त्येव मनीषिणो यत्संस्कृतं हि परमो निधिर्भारतस्य, तत्त्वज्ञानाम् अविरतश्रमस्य फलभूतमेतदीयं विपुलं साहित्यं सर्वातिशायि। अत्र गवेषितं परिशीलितं विवेचितं च लोकप्रत्यक्षं विधातुम् अध्येतॄणां

श्रमाभिमुखत्वमपेक्ष्यते। भाषाभि: समाहार: समन्वयश्च यदि अभीप्स्येत, प्रचुरं प्रशस्तं हृद्यं स्वरूपं समक्षमानेतुम् इष्येत, तदा गौरवानुगुणं सम्भूय यत्न: मनोयोगेन ऐकमत्येन चापेक्ष्यते। पुनरेकदा इदानीन्तन-लोकानुरूपं संस्कृतस्य आलोचनमपेक्षितम्। संस्कृतवाङ्मयप्रतिपत्त्यर्थं सविशेष उपक्रम अपेक्ष्यते। इदानीमामन्त्रये संस्कृताभ्युदयरागिण:, सारस्वतसाधनायां तपस्यतां प्रतिभाप्रकर्षेण प्रखरचिन्तनजनितेन शास्त्रसम्पत् यथा सुरक्षिता स्यात्तथा प्रयतनीयम्। कठोरमध्यवसायं विधाय तत्तद्गुरुजनेभ्य: सपर्याप्राप्तेन तप:फलेन विद्यावैभवेन विद्योतताम्। सम्प्रति शास्त्रसंरक्षणदिशि उदयमानानां तेजस्विनामवतरणं काम्यते, यान् अवाप्येयं सुरभारती परम्परासातत्यं मत्वा नितरां पुष्टिमश्नुताम्, उत्तरोत्तरम् उत्तरला सती प्रवहतु अजस्रम्। अनभ्यासाद् दुरधिगमार्थतां प्राप्तानां ग्रन्थानां पुन:परिशीलनमपेक्षितम् ऋषेरभिप्रायम् ऋषिरेवाधिगन्तुमर्हति, अतस्तपश्चर्यया तादृशप्रातिभं चक्षुरुन्मीलनीयम्, अध्यापनपद्धतौ अपेक्षितपरिष्कार आवश्यक:। विविधविद्यानिष्णाता मनीषिणोऽपि सविशेषमुत्तरदायित्वं मत्वा एतत्समुन्नतौ यथेष्टं यत्नं विदध्यु:। तदैवायं प्रकल्प: फलेग्रहि: स्यात्।

अन्ते पुनरेकवारम् उपाकर्मपर्वणि सारस्वतसपर्यायै बद्धादरेभ्यो मनीषिभ्योऽन्तेवासिभ्य:, एतदर्थं सततं परिश्राम्यद्भ्य:, अन्येभ्यश्च समुपस्थितेभ्यो हार्दिकं भावं परिप्रकाशयन् पद्यविशेषम् उद्धरामि-

**यत्प्रभापटलोद्भासा भारतेऽद्यापि भारतम्।**
**दिव्यं तत्संस्कृतज्योति: आसंसारं प्रवर्धताम्।।**

अन्ते कवीन्द्रं रवीन्द्रं स्मरामि, यैर्महाभागैर्मर्म स्पृशद्गीतमाध्यमेन एवं लोक: सन्दिश्यते, अजस्रं कर्मसम्पादनाय प्रेर्यते च-अयि मम प्रेष्ठा: पक्षिण:, यद्यपि सन्ध्यातमो मन्दमन्थरगत्यां समेधमानं विद्यते, प्रकाशस्य सकलसङ्गीतं तदिङ्गितेन स्तब्धमभूत्, तथापि मम ऋजुचेतसो विहङ्गा:, सम्प्रति पक्षविरामस्य नावसर:, इदानीं परिश्रम्य विश्रामो नोचित:-

**यदि ओ सन्ध्या आसिछे मन्द मन्थरे,**
**सब संगीत गेछे इंगिते थामिया,**
**तबु बिहंग, ओरे बिहंग मोर,**
**एखनि अन्ध बन्द करो न पाखा।**

अर्थाम्नायमवसरो विरामस्य नितरां प्रयत्नशीलानां प्राप्तव्यं प्राप्तुकामानामिति।

**प्रो० वाचस्पति उपाध्याय:**
कुलपति:

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्णनिबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

अस्माकं भारतीयानामेव न केवलमपितु मानवतायाः अभ्युत्थानोपायः वेदविहितो मार्ग एवास्ति नास्त्यत्र संशीतिलेशोऽपि किन्तु वैदिकज्ञानविज्ञानस्य सरहस्यं तेनैव विधिना समुद्घाटितं भवति यो विधिः अस्माकं मुनिभिर्महर्षिभिश्च प्रदर्शितः। स विधिरस्ति तपस्त्यागयोः समवायरूपः। न केवलं एकाकिना तपसा वा किञ्चित् न वैकाकिना त्यागेन किञ्चिद् भवितुमर्हति। भारतीयपरम्परामनुश्रित्य प्रवर्ततां महापुरुषाणां जीवनमवलोकयन्तु तत्रोभयोरनयोः परस्परं समन्वयमेव वैशिष्ट्यमावहति। न केवलं महर्षयः साधवः मुनयो वा समन्वयात्मकमार्गममुमाश्रयन्ते अपितु अस्माकं देशस्य प्रजापालका राजानोऽपि एवमेव प्रवर्तन्ते। भगवतो रामभद्रस्य योगेश्वरकृष्णस्य जीवनमपि सर्वथा पथप्रदर्शकमेव विद्यते। कालिदासः रघुवंशं विवृण्वन् संगिरते यत्–'त्यागाय संभृतानाम्' अर्थात् षोडशगुणेषु त्यागोऽपि तेनैव मनसा तेन प्रदर्शितः। रघुकौत्ससंवादस्तु कालिदासस्य प्रतिभाविशेषमभिव्यनक्ति।

आधुनिकसभ्यताप्रवाहपतिताः जनाः न त्यागं विमृशन्ति न च तपः समाचरन्ति फलतः वैदिकज्ञानविज्ञानस्य लेशमपि ते न स्पृशन्ति का कथा अन्तस्तलप्रवेशस्य। अस्माकं देशे प्रवर्त्तितानां पर्वाणां व्रतानां वा प्रयोजनं मूलतः तपसि त्यागे च दृश्यते। एतेषामाध्यात्मिकं महत्त्वं विचार्यैव शास्त्रकाराः शास्त्रेषु तत्तत्व्रतानुष्ठानविधिं निरूपयन्ति। अन्ततोगत्वा एतत्सर्वं सरहस्यं वेदमधिगन्तुं सहायकं भवति। अस्मादेव कारणात् तत्त्ववेत्तारः प्रायः तपस्विनो भवन्ति। तपसैव वस्तुतः अज्ञातस्य ज्ञानं, गुप्तस्य प्रकाशनं, निमीलितस्य उन्मीलनं वा जायते।

३१ वर्षे अङ्केऽस्मिन् विविधविषयविश्लेषपराः एकादशलेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्-भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोऽहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थते सुमनसः विदुषः।

**प्रो० रमेशकुमारपाण्डेयः**

**सम्पादकः**

# विषयानुक्रमणिका

## संस्कृतम्



## हिन्दी

**English**

# अष्टमदीक्षान्तमहोत्सवावसरे न्यायमूर्त्तीनां बी.एन्. श्रीकृष्णमहोदयानाम् दीक्षान्तभाषणम्

न्यायमूर्त्तीनां बी.एन्. श्रीकृष्णमहोदयानाम्

प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु। नमस्सदसे नमस्सदसस्पतये नमस्सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्यै।

परमपूज्याः सिद्धान्तचक्रवर्तिनः आचार्यविद्यानन्दमुनिवराः, विश्वविद्यालयानुदानायोगस्य कार्य-वाहकाध्यक्षाः राजशेखरन् पिल्लैमहोदयाः, कुलाधिपतिस्थानमलङ्कुर्वाणाः प्रफुल्लमनस्काः न्यायमूर्तयः प्रफुल्ल भगवति महोदयाः,

कुलपतिस्थानभूषणाः वाचस्पतिरित्यन्वर्थनामानः उपाध्यायमहोदयाः, अत्रोपस्थिताः अध्यापकाः, उपाधिभिरलङ्करिष्यमाणाः स्नातकाः, विद्यार्थिनः, सम्मान्या पार्षदाश्च।

अष्टमे दीक्षान्तसमारोहेऽस्मिन्मुख्यातिथिरूपेणागत्य दीक्षान्तभाषणं कर्तव्यमित्यहं भगवतिमहोदयैः माकिं चतुर्भ्यो मासेभ्यः प्रागेव न्यवेदिषि। असमर्थोऽपि भारमिमं वोढुं तेषां सौमनस्येन सौहार्देन गुणैक-ग्रहयालुतया चात्तधैर्योऽभ्युपागममिदं दुस्तरं कार्यम्। प्रथमतस्तावदहमधमर्णः निवेदये च भूयस्तरां मम कार्तज्ञ्यं तेभ्यं कुलपतिभ्यश्च। शुभेऽस्मिन्नवसरे लब्धभागस्य मम नितरां मोमुद्यते मनः। ये च सर्वे परीक्षासु प्राप्तोत्तीर्णताः ये चाद्योपाधिभिरलङ्करिष्यमाणाः तेभ्यस्तेभ्यः साभिनन्दनानि आशंसानानि। सर्वेऽपि च त इतोप्यधिकतराणि यशांसि प्राप्नुवन्त्विति परमेश्वरं प्रार्थये।

विश्वविद्यालयस्यास्य किमपि महत्त्वं वैशिष्ट्यं च वर्तते यदन्येषां विश्वविद्यालयानां नास्ति यदयं गैर्वाण्याः पुनरुज्जीवनशाश्वतप्रतिष्ठालाभयोरनुपदं कृतोद्यमः। मंत्रकृतो ऋषयः श्रमेणान्वैच्छन् गैर्वाणीमिति विज्ञायते श्रुत्युक्तिभिः। समामनन्ति च तैत्तिरीयकाः "यामृषयो मन्त्रकृतो मनीषिणः। अन्वैच्छन् देवास्तपसा श्रमेण। तां देवीं वाचं हविषा यजामहे। सा नो दधातु सुकृतस्य लोक" इति।

अस्मत्पूर्वजैरस्माननुग्रहीतुं संस्कृतं नामानर्घ्यतमं कुलधनं दत्तमस्मभ्यो यत्समं नान्यत्रोपलभ्यते वसुधातले। नास्ति कोऽपि विषयः यमियं भाषा न विववार। मानवानाम् ऐहिकामुष्मिकप्रेयः

श्रेयस्साधनान्यनयैवोपदिष्टानि दरीदृश्यन्ते। प्रवत्तिनिवृत्ती चैवानयोपदिष्टे श्रुतिवाग्भिरनेकधा। 'अयं राजास्यै विशः। बहुग्वै बह्वश्वायै बह्वजाविकायै। बहुव्रीहियवायै बहुमाषतिलायै। बहुहिरण्यायै बहुहस्तिकायै। बहुदासपूरषायै रयिमत्यै पुष्टिमत्यै। बहुराजस्पोषायै राजास्तु' इत्यामनन्ती तैत्तिरीयश्रुतिः वैदिककालिक-राज्यस्वरूपमाह यदिदानीन्तनाः रामराज्यमित्यभिदधन्तोऽद्याप्यवाप्तुं प्रयतन्ते। 'महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह' इति ब्रुवती तैत्तिरीयश्रुतिरपि अधुनातनं जानराज्यमामनन्ती तत्र तात्पर्यमवगमयति। दैनन्दिनव्यवहारोपयोगिनो नैकविषया अपि श्रुतिषु पठिताः। शालिहोत्रीयमश्वशास्त्रं, पालकाप्यीयं गजशास्त्रं, कामन्दकीय नीतिसारं, कौटिलीयमर्थशास्त्रमित्यनेके ग्रन्थाः अस्यामेव भाषायां ग्रथिताः। बहूनां भाषाणां प्रादुर्भावात्प्रागेव अशेषविषयाणामियमाकरप्राया भूत्वा भाषाचक्रवर्तिनीपदमनुभूतवतीति कुशलैर्विमर्श-कैरप्यभ्युगम्यते।

विपरिवर्तिनि कालचक्रे यथा यथा भारतस्य भाग्यं विपर्यवर्तत तथा तथा संस्कृतस्यापि भाग्यचक्रं विपर्यवर्तत। वैदेशिकानामाक्रमणं तैस्तैः स्वीयभाषापोषणमित्यादिभिः हेतुभिः राहुग्रस्तोऽभूत् संस्कृतसुधांशुः। उपरागग्रस्तेऽपि संस्कृतचन्द्रमसि संरक्षितस्तस्य जीवातुः पण्डितैस्तत्र तत्र स्वाध्ययनाध्यापन-प्रणालिभिः। यैरियं परिरक्षिता तेभ्यो नितरामधमर्णाः वयम्। **"नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण"** इति कवेरुक्तिं सत्यापयतीव गैर्वाण्या अपि भाग्यमधुना उच्छ्रितिमेतीति दृश्यते। स्वातन्त्र्योपलब्धेरनन्तरं सर्वकारेण भूयान् परिश्रमः कृतः संस्कृतस्य पुनरुज्जीवनार्थम्। तदनुषङ्गेन स्थले स्थले स्थापिताः संस्कृतपाठशालाः विश्वविद्यालयाश्च। उताहो किमियद्भिरेव यत्नैरपेक्षितं फलं प्राप्तुं शक्यमिति चिन्तनीयम-स्माभिः। सार्धशताधिकवत्सरेभ्यः आशैशवादा च विश्वविद्यालयं निरन्तरं प्रचलन्ती पाश्चात्यविद्याप्रणाली बहूनां भारतीयानां मनांसि पाश्चात्यसंस्कृतिमयानि पर्यणमतय। प्रादुरभावयच्च चिरप्ररूढायां भारतीयसंस्कृताववज्ञाम्। तद्ग्रहादद्याप्यात्मानं मोचयितुं न प्रभवामो वयम्। **"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः"** इति भगवदुक्तिं स्मारयन्तः देशे समाजे च श्रेष्ठत्वस्य पंक्तिं भजन्तोऽपि ग्रहादस्मान्न मुक्ताः। को वा कथा अस्मादृशानां सामान्यानाम्? कालेऽस्मिन्नधुनातने संस्कृतं सर्वथाऽनुपयोगीत्यपि भ्रान्तित-मस्तावदावृणोति कुशलमतीनपि। भ्रान्तेरस्य निरासार्थमहर्निशं प्रयतितव्यं युष्माभिस्सर्वैरपि। प्रतिपच्चन्द्रलेखेव वर्धिष्णुर्विश्ववन्दिता यथेयं सुरभारती भूयात्तथा कार्यः प्रयत्नो महान्भवद्भिः। भारतीयानां संस्कृतिस्वातन्त्र्यं तु भारतीयशिक्षापद्धतिमनुसृत्य श्रुतिस्मृतिपुराणेतिहासकाव्यनाटकसुरसरस्वतीमयानां ग्रन्थानामधीतिबोधाचारण-प्रचारणादेव साध्यं नेतरथेति मन्ये। विज्ञानं भारतीयसंस्कृत्यविरोधि संपाद्यं विश्वविद्यालयेष्वित्यभिप्रैमि।

विद्यालयेषु यथा विद्या अध्याप्यते तथैव छात्रेषु विनयाधानमप्यत्यन्तमावश्यकम्। विद्यार्थिदशायाम् आत्तविनया एव देशस्यास्य श्रेष्ठनागरिका भवितुमर्हन्ति। विना विनयेन विद्या नैव शोभते। 'विद्या ददाति

विनयं विनयाद्याति पात्रतां पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततस्सुखम्' इति हि सुभाषितम्। कतिपयेभ्यो हायनेभ्यः प्राक् भारतसर्वकारनियमितः विश्वविद्यालयाऽऽयोगः स्वावेदने महाविद्यालेषु विश्वविद्यालयेषु च अध्यपकाध्येतॄणां नैतिकह्रासं विनयाभावतां प्रति खेदं प्रदर्श्य तेषु विनयस्य संस्कृतेश्च वृद्ध्यावश्यकतां वयं निरचिनुम इत्याशयमाविरकरोत्। संस्कृताध्येतॄणां विषये तु नैषा कथा यतः संस्कृताध्ययनस्य स्वाभाविकं विनयाधानमेवास्य हेतुरित्यवगच्छामि। मुम्बयीविश्वविद्यालयस्य मुख्यद्वारे फलकस्योपरि "सा विद्या या विमुक्तये" इत्येकं ध्येयवाक्यं लिखितं दरीदृश्यते। सा च विमुक्तिः कीदृशी इति विचारः कर्तव्यः। शब्दस्यास्य न केवलं मोक्षपर्याया त्वमपि तु मनुष्याणां हृदि वर्तमानानां द्वेषदम्भासूयादीनां सर्वासामपि मनोवृत्तीनां याभिः राष्ट्रस्यैकमत्यं प्रजानां सौमनस्यं सौहार्दं च ह्रासमियात्तासामपि निरसनम् अभिप्रेतमित्येवं मे दृढा मतिः। यदि विद्यया नैतादृशी परिणतिः, धिक्तां विद्याम्। रघुवंशकाव्ये **"प्रजानां विनयाधानाद्रक्षणाद्भरणादपि स पिता पितरस्तासां केवलं जन्महेतवः"** इति ब्रुवता कविकुलगुरुणापि प्रजासु विनयाधानमेवाद्यं राज्ञा कर्तव्यमिति सूचितम्।

प्रामाणिकतयाः मानदण्डेन अस्मद्देशस्य दुरवस्थैव दृश्यते। इदं तु अतीव शोचनीयं यद्धर्मो विश्वस्य जगतः प्रतिष्ठा धर्मं परमं वदन्तीति श्रुतिर्यत्र घुष्यते तत्रैव धर्मस्य महती हानिः संजाघटीति। अपरिमिता आशैवास्य अधोगतेः मूलकारणम्। **"ऊर्ध्वबाहुर्विरौम्येष नहि कश्चिच्छृणोति मे। धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते"** इति व्यासोक्तिः विस्मृतप्राया एव। यावदर्थकामौ धर्माङ्कुशेन अनियन्त्रितौ स्याताम् तावदस्याः दुर्दशायाः नान्तं पश्यामः। धर्माङ्कुशस्य जागृतिः विद्यायाः परिणाम एव। सदाचारशीलैः बोधिता सद्विद्यैव छात्राणां मनसि सच्छीलताम् उद्भावयति यदेव विद्यायाः परिपाकः। तथा परिपक्वमनस्कैरेव छात्रैः भाविनिकाले देशस्य समाजस्य चोन्नतिः साध्या।

युनेस्को जागतिकसंघेन क्रि.श. २०००तमं वत्सरन् अन्तर्राष्ट्रीयशान्तिसंस्कृतिहायनमित्तयुद्घुष्टम्। केवलैर्घोषैः कार्यप्रवर्तनहीनैर्विश्वशान्तिर्न दृढीक्रियते। तदर्थं बहु प्रयतनीयम्। तस्मिन्कर्मणि विद्यालयानां मुख्यं पात्रम्। युद्धानि मनुष्याणां मनस्येव जायन्ते इति ज्ञात्वा तेषां शान्तेः सुभद्राणि दुर्गाणि स्थापयितव्यानि। तत एव विश्वशान्तिः सुप्रतिष्ठिता भवेत्।

माकिं षष्ठिवत्सरेभ्यः प्रागेव राष्ट्रपितेति प्रख्यातेन गांधीमहोदयेन अस्मद्राष्ट्रोन्नतेरन्तरायभूताः सप्तदोषाः संख्याताः। ते तु–

१. तत्त्वविहीना राजनीतिः

२. विना श्रमेणाधिगताः संपत्तिः

३. अन्तस्साक्ष्यनवरुद्धो भोग:

४. शीलोज्झिता विद्या

५. नीतिशून्यं वाणिज्यम्

६. त्यागरहिता अर्चा

७. मानवीयत्वरहितं विज्ञानतन्त्रम्, इति।

गांधीमहोदयेन ६० वत्सराणां प्रागेव यदुक्तं तदद्यापि सत्यमित्याभाति। ते दोषा नापाकृता अपि तु प्रवर्धिता एव यतो हेतोरेव अद्यतनीया शोचनीया परिस्थितिरस्मान् बाधते। विवेकानन्दस्वामिना उक्तमस्माभि: सैव विद्या संपाद्या यया शीलवृत्ते संवर्धेते, मनस्सत्त्वं प्रवर्धतेतराम्, बुद्धिरसंकुचिता भवेत्, यया चास्माकं स्वपादयोरुत्तम्भनबलमप्रतिहतं भूयादिति। सैव विद्या प्रापणीया या उक्तगुणैस्सम्पन्ना स्यादुक्तदोषैश्च विमुक्ता। शीलवृत्तफला हि विद्या। **"विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं विद्या भोगकरी यशस्सुखकरी विद्या गुरूणां गुरु:। विद्या राजसु पूज्यते नहि धनं विद्याविहीन: पशु:"** इति भणता भर्तृहरिणा विद्याया: श्रेष्ठत्वं प्रादर्शि। अतो हेतोरेव भारतीयानां संस्कृतौ विद्याया: विद्याप्रदातृणामाचार्याणां च अत्युन्नतं पदं यस्यौन्नत्यं परिरक्षणीयं सर्वैराचार्यै: आदर्शप्रायैर्भूत्वा छात्राणाम्। तथाभूता एव गुरुरित्यभिधानेनालङ्कृतास्स्यु:। गुरोस्तु माहात्म्यं शास्त्रेषु बहुधा वर्णितमास्ते। आचार्यशंकरभगवत्पादै मनोज्ञतया तदुपवर्णितं शतश्लोक्यां–

> **"दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातु:।**
> **स्पर्शश्चेत्तत्र कल्प्य: स नयति यदहो स्वर्णतामश्मसारम्।।**
>
> **न स्पर्शत्वं तथापि श्रितचरणयुगे सद्गुरु: स्वीयशिष्ये।**
> **स्वीयं साम्यं विधत्ते भवति निरुपमस्तेन वालौकिकोऽपि।।"** इति

विद्यालयै: कीदृशै: भाव्यम्? यत्र विविदूषाणां योग्यानां छात्राणामध्यापकैर्विद्या अध्याप्यन्ते, अधीता च विद्या: स्वहिताय, राष्ट्रहिताय, समाजहिताय च उत्तमोपयोगं निनीष्यन्ते, निरङ्कुशया विचारप्रवृत्त्या बुद्धे: विस्तारं संपाद्यन्ते, यत्र चाधीतिन: छात्रा: विनयमूर्तयो समाजस्य राष्ट्रस्य च हितं स्वहिताधिकं मन्यन्ते, ते खलु विद्यालया: अन्वर्था भवितुमर्हन्ति।

अध्यापकाश्च विद्याविनयसम्पन्ना: सात्त्विका: सत्यवाच: स्वसंस्कृत्यभिमानिन: शिष्यहितेच्छवो भवेयुर्येषां सहवासबलेन दीपात्प्रवर्तिनी दीपा इव छात्रास्तेषां साम्यं प्राप्नुयु:। ते खलु वन्द्या:। तेषामेव कृते च कालिदासोक्ति: **"श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता। यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव"** इति। अयं च विश्वविद्यालय: ईदृक्ष एव इत्यहं सुदृढं विश्वसिमि।

प्राचीनायां विद्याभ्यासपद्धतौ अधीतानां विषयाणां कण्ठोपस्थिति: तलस्पर्शिक्षोदक्षमपाण्डित्य-संपादकता चासीत्। परं दूये तदधुना नैव दृश्यते। अधुन तु छात्रवृत्तिग्रहणाय परीक्षाप्रवेशलाभाय तदपेक्षितोपस्थितिसंख्यापूरणे जागरूकाश्छात्रा: परीक्षाकालत: द्वित्रमासेभ्य: प्राक् पूर्ववत्सरीया: प्रश्नपत्रिका: समाकलय्य प्रश्नानां टिप्पणीर्विलिख्य विलिख्य वा तासां सम्यगभ्यसनेनैव प्रथमश्रेण्यामुत्तीर्णा भवन्ति। केचित्तु परीक्षाकाणां नामादिकमन्विष्य उत्तरपत्रे अधिकसंख्यालाभाय कृतमहाप्रयत्ना:। अधिजिगांसवोऽधी-तिनश्च छात्रा: यदाकदापि यत्रकुत्रापि सन्त्येव परं तेषां संख्या नाधिका। निरूपितया प्रणाल्या उत्तीर्णपरीक्षा: यद्यध्यापकपदमलङ्कुर्यु: कीदृशी दुरवस्था छात्राणां स्यादिति चिन्तनीयम्।

संशोधनस्य परिस्थितिरपि विचारार्हा। तत्र संशोधनं द्विविधं बाह्यमाभ्यन्तरं च। ग्रन्थानां कर्तृदेशकालादिचिन्तनं, पूर्वेभ्यो ग्रन्थकृद्भ्य: कथमयमधमर्ण:, तत्प्रणीता ग्रन्थान्तरा, तेषां पौर्वापर्यमित्यादि-विषयाणां चिन्तनं बाह्यम्। अस्मिन् विषये पाश्चात्या: विद्वांस: अतिकुशला:। तदनतिप्रयोजनमिति मन्यमाना: प्राञ्चो विद्वांसस्तत्र उदासामासु:। ग्रन्थप्रतिपादितविषयाणां सूक्ष्मेक्षिकया विमर्शे, तद्बोधिततत्त्वनिर्धारणे च महान्तं यत्नमातस्थु:। ग्रन्थार्थस्य संगमनाय कृतबहुयत्ना अपि यदि तदप्रामाणिकं मन्वीरन् तर्हि उक्तानुक्तदुरुक्तपरीक्षणमवश्यं कुर्यु:। तथैव समुत्पन्ना सूत्रभाष्यवार्तिकटीकाटिप्पण्यादीनां प्रणाली। सत्यपि पूर्वाचार्यविषये निरतिशये गौरवे वस्तुतत्त्वविमर्शे तन्नान्तरायी भवति स्म। यथाप्रतिभं श्रद्धागौरवानतिक्रमेण तत्त्वचिन्तने प्रयतमाना स्यु:। **"पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्। सन्त: परीक्ष्यान्यतरद्भजन्ते मूढ: परप्रत्ययबुद्धि"** इति विचारस्वातन्त्र्यं कालिदासेन घोषितम्। परस्परं विचारविमर्शनेन ज्ञानवृद्धि: सौहाद्रम् ऐकमत्यं संस्कृतस्य तद्विदाञ्च उन्नतिश्च नियतं भवेत्।

प्रेष्ठा: विद्यार्थिन:, "वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति" इत्यारभ्य "एष उपदेश:, एषा वेदोपनिषत्, एतदनुशासनम्, एवमुपासितव्यम्, एवम् चैतदुपास्यम्" इत्यन्तात्तैत्तिरीयोपनिषदुपदिष्टात् परमनुशासनम् दुर्लभम्। तद्भवद्भि: ज्ञातमेव स्यादिति न पुनरावर्त्यते। तत्तु पुन:पुनरनुसंधत्त। भाविनिकाले

३. अन्तस्साक्ष्यनवरुद्धो भोगः

४. शीलोज्झिता विद्या

५. नीतिशून्यं वाणिज्यम्

६. त्यागरहिता अर्चा

७. मानवीयत्वरहितं विज्ञानतन्त्रम्, इति।

गांधीमहोदयेन ६० वत्सराणां प्रागेव यदुक्तं तदद्यापि सत्यमित्याभाति। ते दोषा नापाकृता अपि तु प्रवर्धिता एव यतो हेतोरेव अद्यतनीया शोचनीया परिस्थितिरस्मान् बाधते। विवेकानन्दस्वामिना उक्तमस्माभिः सैव विद्या संपाद्या यया शीलवृत्ते संवर्धेते, मनस्सत्त्वं प्रवर्धतेतराम्, बुद्धिरसंकुचिता भवेत्, यया चास्माकं स्वपादयोरुत्तम्भनबलमप्रतिहतं भूयादिति। सैव विद्या प्रापणीया या उक्तगुणैस्सम्पन्ना स्यादुक्तदोषैश्च विमुक्ता। शीलवृत्तफला हि विद्या। **"विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं विद्या भोगकरी यशस्सुखकरी विद्या गुरूणां गुरुः। विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः"** इति भणता भर्तृहरिणा विद्यायाः श्रेष्ठत्वं प्रादर्शि। अतो हेतोरेव भारतीयानां संस्कृतौ विद्यायाः विद्याप्रदातृणामाचार्याणां च अत्युन्नतं पदं यस्यौन्नत्यं परिरक्षणीयं सर्वैराचार्यैः आदर्शप्रायैर्भूत्वा छात्राणाम्। तथाभूता एव गुरुरित्यभिधानेनालङ्कृतास्स्युः। गुरोस्तु माहात्म्यं शास्त्रेषु बहुधा वर्णितमास्ते। आचार्यशंकरभगवत्पादै मनोज्ञतया तदुपवर्णितं शतश्लोक्यां–

**"दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातुः।**
**स्पर्शश्चेत्तत्र कल्प्यः स नयति यदहो स्वर्णतामश्मसारम्।।**
**न स्पर्शत्वं तथापि श्रितचरणयुगे सद्गुरुः स्वीयशिष्ये।**
**स्वीयं साम्यं विधत्ते भवति निरुपमस्तेन वालौकिकोऽपि।।"** इति

विद्यालयैः कीदृशैः भाव्यम्? यत्र विविदूषाणां योग्यानां छात्राणामध्यापकैर्विद्या अध्याप्यन्ते, अधीता च विद्याः स्वहिताय, राष्ट्रहिताय, समाजहिताय च उत्तमोपयोगं निनीष्यन्ते, निरङ्कुशया विचारप्रवृत्त्या बुद्धेः विस्तारं संपाद्यन्ते, यत्र चाधीतिनः छात्राः विनयमूर्तयो समाजस्य राष्ट्रस्य च हितं स्वहिताधिकं मन्यन्ते, ते खलु विद्यालयाः अन्वर्था भवितुमर्हन्ति।

अध्यापकाश्च विद्याविनयसम्पन्नाः सात्त्विकाः सत्यवाचः स्वसंस्कृत्यभिमानिनः शिष्यहितेच्छवो भवेयुर्येषां सहवासबलेन दीपात्प्रवर्तिनी दीपा इव छात्रास्तेषां साम्यं प्राप्नुयुः। ते खलु वन्द्याः। तेषामेव कृते च कालिदासोक्तिः **“शिलष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता। यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव”** इति। अयं च विश्वविद्यालयः ईदृक्ष एव इत्यहं सुदृढं विश्वसिमि।

प्राचीनायां विद्याभ्यासपद्धतौ अधीतानां विषयाणां कण्ठोपस्थितिः तलस्पर्शिक्षोदक्षमपाण्डित्य-संपादकता चासीत्। परं दूये तदधुना नैव दृश्यते। अधुन तु छात्रवृत्तिग्रहणाय परीक्षाप्रवेशलाभाय तदपेक्षितोपस्थितिसंख्यापूरणे जागरूकाश्छात्राः परीक्षाकालतः द्वित्रमासेभ्यः प्राक् पूर्ववत्सरीयाः प्रश्नपत्रिकाः समाकलय्य प्रश्नानां टिप्पणीर्विलिख्य विलिख्य वा तासां सम्यगभ्यसनेनैव प्रथमश्रेण्यामुत्तीर्णा भवन्ति। केचित्तु परीक्षाकाणां नामादिकमन्विष्य उत्तरपत्रे अधिकसंख्यालाभाय कृतमहाप्रयत्नाः। अधिजिगांसवोऽधी-तिनश्च छात्राः यदाकदापि यत्रकुत्रापि सन्त्येव परं तेषां संख्या नाधिका। निरूपितया प्रणाल्या उत्तीर्णपरीक्षाः यद्यध्यापकपदमलङ्कुर्युः कीदृशी दुरवस्था छात्राणां स्यादिति चिन्तनीयम्।

संशोधनस्य परिस्थितिरपि विचारार्हा। तत्र संशोधनं द्विविधं बाह्यमाभ्यन्तरं च। ग्रन्थानां कर्तृदेशकालादिचिन्तनं, पूर्वेभ्यो ग्रन्थकृद्भ्यः कथमयमधमर्णः, तत्प्रणीता ग्रन्थान्तरा, तेषां पौर्वापर्यमित्यादि-विषयाणां चिन्तनं बाह्यम्। अस्मिन् विषये पाश्चात्याः विद्वांसः अतिकुशलाः। तदनतिप्रयोजनमिति मन्यमानाः प्राञ्चो विद्वांसस्तत्र उदासामासुः। ग्रन्थप्रतिपादितविषयाणां सूक्ष्मेक्षिकया विमर्शे, तद्बोधिततत्त्वनिर्धारणे च महान्तं यत्नमातस्थुः। ग्रन्थार्थस्य संगमनाय कृतबहुयत्ना अपि यदि तदप्रामाणिकं मन्वीरन् तर्हि उक्तानुक्तदुरुक्तपरीक्षणमवश्यं कुर्युः। तथैव समुत्पन्ना सूत्रभाष्यवार्तिकटीकाटिप्पण्यादीनां प्रणाली। सत्यपि पूर्वाचार्यविषये निरतिशये गौरवे वस्तुतत्त्वविमर्शे तन्नान्तरायी भवति स्म। यथाप्रतिभं श्रद्धागौरवानतिक्रमेण तत्त्वचिन्तने प्रयतमाना स्युः। **“पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्। सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययबुद्धि”** इति विचारस्वातन्त्र्यं कालिदासेन घोषितम्। परस्परं विचारविमर्शनेन ज्ञानवृद्धिः सौहाद्रम् ऐकमत्यं संस्कृतस्य तद्विदाञ्च उन्नतिश्च नियतं भवेत्।

प्रेष्ठाः विद्यार्थिनः, “वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति” इत्यारभ्य “एष उपदेशः, एषा वेदोपनिषत्, एतदनुशासनम्, एवमुपासितव्यम्, एवम् चैतदुपास्यम्” इत्यन्तात्तैत्तिरीयोपनिषदुपदिष्टात् परमनुशासनम् दुर्लभम्। तद्भवद्भिः ज्ञातमेव स्यादिति न पुनरावर्त्यते। तत्तु पुनःपुनरनुसंधत्त। भाविनिकाले

भवन्तः देशस्यास्य संस्कृतेः संस्कृतस्य च रक्षितारो मार्गदर्शयितारश्च। भवदधीन शास्त्रणाम् अस्मत्कुलधनस्य च परिरक्षणम्। तच्च अधीतिबोधाचरणप्रचारणैरेवेति मा विस्मरत। शास्त्रागर्हितं लोकसम्मतं च समाचरत। अध्यापकैरपि तथा व्यवहर्तव्यं यथा अयं नः पिता योऽस्माकमविद्यायाः परं पारं तारयति इति शिष्याः निश्चिनुयुः। आत्मनः प्रतिकूलानि परेषां न समाचरत। विद्याधनाभिजनानि भवत्सु मा मदं जनयन्तु। विद्या भवत्सु विनयं प्रसूताम् **"समानी व आकूतिः समाना हृदयानि वः समानमस्तु मनो यथा नस्सुसहासति"** इतीमाम् ऋगुक्तिं सदैव संस्मृत्य लोके व्यवहरत।

**शन्नो मित्रश्शम् वरुणः। शन्नो भवत्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्। ॐ शान्तिश्शान्तिश्-शान्तिः।** इत्यनया वैदिक्या प्रार्थनया उपसंहरामि।

# मनो राजनीतिकविचाराणां मीमांसा

डॉ० राधिकाप्रसादो मिश्रः

आधुनिकी राजनीतिधारणा राज्यं चतुरङ्गि वर्णयति। तान्यङ्गानि च १. भूभागः, २. जनसंख्या, ३. शासनम्, ४. सम्प्रभुत्वञ्च। पुरं पुरातनी धारणा सप्ताङ्गेषु राज्यं विबभाज। अत एव हिन्दुराज्यं सप्तात्मकं राज्यमित्यभिधीयते स्म। मनुमते सप्ताङ्गानि च–

'स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते।।'[१]

राजा, अमात्यः, दण्डः, कोषः, राष्ट्रम्, पूः, सेना च। एषु च राज्ञः (स्वामिनः) सर्वातिशायि महत्त्वमासीत्। शेषाषि षट् तत्त्वानि एतस्यैवानुषङ्गीण्यासन्। अस्यैवाभिप्रायस्याभिधानं डॉ० दीक्षितेन कृतम्–'सत्यमेतद् यत्सप्तैवाङ्गानि स्वे स्वे स्थाने महत्त्वाधायीनि सन्ति, परं विचारे कृते सति राज्ञ एव महत्त्वं सर्वातिशायि तिष्ठति। अत एव राज्यस्य मूलं, शीर्षस्थं वा तत्त्वं राजा गण्यते। एष राजा न केवलं विभिन्नानामङ्गानां सञ्चालनं करोत्यपितु तेषु तारतम्यमपि विदधाति, रक्षति च तानि। राजास्य कस्याप्यङ्गस्याहितकारिणं जनं दण्डयितुं सोऽर्हति।[२]

न केवलमेतत्, अपि तु राज्यस्यैकमभिन्नमङ्गं चापि भवति राजा। राज्ञोऽनुपस्थितौ राज्यस्य कल्पनापि न सम्भवासीत्। मनुना स्वयमेव स्मृतं यत्संसारेऽस्मिन् राज्ञोऽभावे सर्वत्र विद्रवः आरब्धः।[३] तस्मादस्य जगतो रक्षणार्थमीश्वरेण राज्ञः सृष्टिः कृता।[४] एषा हि भारतीया मान्यता। राजाऽस्ति देवानां परमो देवः। तस्मिन् कतिपये विशिष्टा गुणा अपेक्षन्ते। वस्तुतो हि गुणैरेतैरेव स देवत्वं लभते।[५] डॉ० मोटवानी लिखति यदेकः सदाचारसम्पन्नो न्यायनिष्ठो नृप एव देवत्वं लब्धुं कल्पते। न हि स

---

१. मनुस्मृतिः ९/२९४

२. डॉ० प्रेमकुमार दीक्षित–महाभारत में राज्यव्यवस्था पृष्ठ १५

३. मनुस्मृतिः ७/३

४. तत्रैव ७/३–४

५. तत्रैव ७/७–८

एका प्रतिमा (मूर्त्तिः) या पूजिता स्यात्। तस्मिन्नावश्यकरूपेण किमपि तादृशं स्यात् यद्धि पूज्यत्वं प्राप्नुयात्।[१] तस्मिन्नेते गुणा एव तं पूजनीयं कल्पन्ते। वक्तुं पार्यते यन्नृपः केवलमस्मिन्नंशे भगवदंशोऽन्यथा तु परमो देव एव स यत्तस्मिन् भगवतो विभूतयो विराजन्ते।[२] याः सामान्यलोकाय दुष्प्राप्याः याश्च तेनोग्रतपसाऽऽत्मसंयमेनाधिगताः। एवं तदाचरणं सर्वसाधारणजनानां कृते निदर्शनमाचरणीयं च भवति। डॉ० श्यामलालपाण्डेयो लिखति, 'हिन्दुनृपतिरिंग्लेण्डनृपतिजेम्सप्रथम इवोत वा फ्रांसस्य लुईचतुर्दशनृप इव निरङ्कुश उत्तरदायित्वरहितश्च क्वापि नैव भवति। तस्योत्तरदायित्वं महत् स राज्यस्य नियमानुवर्त्ती भवति। परम्परया निर्धारितानि कर्त्तव्यानि वहति सः। तस्य प्रमुखं कर्त्तव्यमस्ति यत्तत्प्रजा निष्पापा वर्णाश्रमधर्मपरायणा भूत्वा धर्मार्थकामरूप–त्रिवर्गपुरुषार्थप्राप्त्यै संलग्ना स्यात्।'[३] अन्यत्राप्येकस्मिन् स्थले स लिखति 'निर्धारितनियमानुसारेण स्वाचरणं नियमितुं हिन्दुराजा निगडित आसीत् तान्नियमानुसारमेव प्रजाः शासितुमपि बद्धोऽभूत्। एते नियमा एव राजधर्म इति नाम्ना प्रथिताः, स राजधर्मश्च नित्यः।'[४]

राज्ञो निश्चितानि सन्ति दायित्वानि येषां परिपालनं तेनापरिहार्यरूपेण करणीयम्। राज्यरक्षणं तस्य प्रथमं दायित्वम्। एतदेव च तज्जन्मनो हेतुतयाभिहितं प्रमुखं कारणम्। अस्योद्देशस्योपलब्धयेऽसौ महतीभिश्शक्तिभिर्योजितः। मनोर्विचारे राज्ञा शक्तिशालिना बलिना च भाव्यं नत्वशक्तेन दुर्बलेन राष्ट्ररक्षणं सम्भाव्यते। तेन बलहीनो नृपः कटु भर्त्सितः।[५] मनुस्तमेव राजानं मनुते यः प्रजा रक्षितुं समर्थः स्यात्।[६]

राज्ञि निहितानि दैवीनि लक्षणानि तं महतोऽस्य दायित्वस्य निर्वहने सामर्थ्यं प्रयच्छन्ति। परं मनुरपेक्षते यद्राजा दृढात्मानुशासनपरः स्यात्। वेदानामध्ययनेन योगाभ्यासेन च ज्ञानी, संयमी, स्थितप्रज्ञः, स्वस्थश्च स्यात्।[७] यथा च श्रीमोटवानी लिखितवान्, 'प्रत्यहमाध्यात्मिकं पुनर्निर्माणं स्यात्, तेन च कर्त्तव्यपूर्त्तिस्सहजा भवेत्।'[८] मनुस्मृतिर्नृपस्य दिनचर्यां नियमयति। तदनुसारं राजा प्रतिदिनं प्रातरुत्थाय

---

१. डॉ० श्यामलाल पाण्डेय–जनतन्त्रवाद रामायण और महाभारतकालीन पृष्ठ १५

२. मनुस्मृति ७/३-११

३. डॉ० केवल मोटवानी–मनुधर्मशास्त्र पृष्ठ १३८

४. डॉ० श्यामलाल पाण्डेय–जनतन्त्रवाद रामायण और महाभारतकालीन पृष्ठ १६

५. मनुस्मृतिः ७/२०-२१

६. तत्रैव ७/२-३, १४

७. तत्रैव ७/१-२

८. डॉ० केवल मोटवानी–मनुधर्मशास्त्र पृष्ठ १३८

वेदत्रय्यर्थाभिज्ञानां नीतिशास्त्रनिपुणानां पवित्रात्मनां वयसा तपसा च वृद्धानां श्रेष्ठानां ब्राह्मणानां सेवां कुर्यात्, तदादेशानुसारमाचरेत्।[१] तेभ्यो विनयं शिक्षेत। ब्राह्मणान् सेवमानो नृपो राक्षसेष्वपि पूजितो भवति। विनयी च नृपतिर्नहि नाशं प्राप्नोति।[२] राजा रात्र्या अन्तिमे प्रहरे जागृतो भूत्वा शौचादिभिर्निवृत्तो भूत्वा, संयतचेतसाऽग्नौ हवनं विदध्यात्। ब्राह्मणान् संसेव्य वास्तुशास्त्रानुसारं निर्मितां राजसभां स्वां प्रविशेत्।[३] तत्रोपस्थिताः प्रजाः दर्शनसम्भाषणादिना संतोष्य विसर्जयेत्। तदनु मन्त्रिभिः सह सन्धिविग्रहादिविषयान् विचारयेत्। मध्याह्नेऽर्धरात्रौ वा यदा चित्तं शान्तं शरीरं च क्लेशरहितं स्यात् तदा राजा मन्त्रिभिः साकमेकाकी वा धर्मार्थकामान् चिन्तयेत्।[४]

मन्त्रिभिः सह विस्तृतं मन्त्रयित्वा शस्त्रादिभिर्नित्यं नियमानुसारं व्यायम्य, मध्याह्नभवां स्नानादिक्रियां निर्वर्त्य, भोजनार्थमन्तःपुरं प्रविशेत्।[५] भोजनानन्तरं किञ्चित्कालमन्तःपुरे स्त्रीभिः सह विहरेत्। पश्चाच्च पुना राज्यकार्यं चिन्तयेत्।[६] वस्त्राभूषणादिभिः सुसज्जितः सन् सैनिकान्, वाहनानि, सर्वविधशस्त्रास्त्राणि तदाभूषणालङ्कारादीनि च निरीक्षेत्।[७] तदनु सन्ध्योपासनादिना निवृत्यान्तर्गृहे रहसि सशस्त्रस्सावधानः स्थित्वा रहस्यभाषिणां गुप्तचराणां संवादं शृणुयात्। तानाज्ञाप्य विसर्ज्य च परिचारिकाभिः स्त्रीभिश्च सह भोजनायान्तःपुरं प्रविशेत्। तत्र वाद्यानां मधुरस्वरैः प्रसन्नः सन् पुनः किमपि रुचिकरं भुक्त्वा यथासमयं शयीत, सम्यक् च विश्रमेत। रात्रेरन्तिमे प्रहरे जागृयात्।[८]

स्वयं पूर्णाधिकारसामर्थ्यसम्पन्नोऽपि भूत्वा राजा स्वात्मानं धर्मपराधीनं विधिनियन्त्रितं च मन्येत, न तु स्वैराचारी आर्यगर्हितो भूयात्। एष धर्म एव सा व्यवस्था यामुल्लङ्घयितुं न कश्चिन्नृपो भुवि क्षमते। धर्मः समानरूपेण राजानं प्रजाश्च शास्ति। अस्यैव धर्मस्य च्छाया राजशक्तिः। राज्ञो हितार्थमेवेश्वरेण स्वतेजसा निर्मितः स्वपुत्रो धर्मदण्डो जगति प्रकटीकृतः। मनुः स्मरति–राज्ञः प्रयोजनस्य सिद्ध्यर्थमेवेश्वरः सर्वप्राणिरक्षकं ब्रह्मतेजोमयं धर्मपुत्ररूपं दण्डमसृजत्।[९] दण्डभयादेव चराचरास्सर्वे

---

१. मनुस्मृतिः ७/३७

२. तत्रैव ७/३८–३९

३. तत्रैव ७/१४५

४. तत्रैव ७/१४६–४७, ५१

५. तत्रैव ७/२१६

६. तत्रैव ७/२२१

७. तत्रैव ७/२२२

८. तत्रैव ७/२२३–२२५

९. तत्रैव ७/११, १४, १७

प्राणवन्तः सुखं भोक्तुं क्षमन्ते, स्वधर्मतश्च नैव विचलन्ति।[१] दण्डाधीनं जगत्सर्वम्।[२] सहजः शुद्धः साधुर्विरलो भवति। दण्डभीतेः संसारस्य प्राणिनः स्वं स्वं भोग्यं भुञ्जन्ति। देवदानवगन्धर्वराक्षसाः पक्षिणो नागाश्च सर्वे दण्डभयादेव भीताः स्वस्वनियमान् वहन्ति।[३] मनुः स्मरति, 'दण्ड एव राजा, पुरुषः, नेता, शासकः, सर्वाश्रमधर्माणां प्रतिभूः' इति।[४] दण्डः शास्ति सर्वाः प्रजाः, रक्षति च स एव। निद्रितेषु रक्षिषु स एव जागर्ति।[५] अत एव ज्ञानिनो दण्डमेव धर्ममभिदधते। राजाऽनेनैव धर्मेण बद्धः। मनुर्वदति, 'दण्डो धर्माद्भ्रष्टं राजानं सबन्धुबान्धवं नाशयति, तदनु चासौ दुर्गं, देशं, स्थावरं, जङ्गमं, जीवं, अन्तरिक्षस्थितान् देवान् ऋषींश्चाऽपि विनाशयति।'[६] न केवलमेतत्, राजा धर्मेणौचित्येनैव[७] न केवलं बद्धोऽभूत्, अपितु स्वप्रजां प्रति स्वदायित्वमपि तं बबन्ध। प्रजया नृपस्याज्ञापालनं क्वचिन्न कृतमिति तस्य शक्तिः सीमिततां व्यनक्ति। मनुर्वदति यद् यो नृपः स्वप्रजाः पीडयति स शीघ्रमेव सकुटुम्बो राज्यं जीवनं च नाशयति।[८] यथा शरीरक्षयात् प्राणिनां प्राणा नश्यन्ति तद्वत्प्रजापीडया राज्ञां प्राणास्तान् त्यजन्ति।[९]

वाचस्पतिगैरोला लिखति, 'तस्य (राज्ञः) जीवनस्य प्रत्येकं क्षणः प्रजाहिताय वर्त्तते।'[१०] एवं मनुना दर्शितो नृपः शक्तिसम्पन्नोऽपि नैव निरङ्कुशः। यद् व्यवस्थान्तर्गतः (धर्मदण्डाधीनः) सः स्वकर्त्तव्यानि पूर्णरीत्या निर्वहति, सैव व्यवस्था तदधिकारान् निर्धार्य तान् सङ्कोचयति; सीमायां बध्नाति।[११] एतस्यैव परिणामो जातो यद् राजा सम्मानं तु प्राप्तवान् परं राजधर्मे बद्धः; स्वैराचारेण वर्जितः। वस्तुतो हिन्दुनृपतेरिदमेव स्वरूपम्। डॉ० श्यामलालपाण्डेयो नृपस्येदमेव स्वरूपं विवृण्वन् लिखति, 'हिन्दुर्देवराजा यस्य स्वरूपं रामायणे महाभारते च वर्णितं, अन्यैर्हिन्दुराजनीतिविद्वद्भिश्चानुमोदितं केवलं वैधानिकः

---

१. मनुस्मृतिः ७/१५-१७
२. तत्रैव ७/२२
३. तत्रैव ७/२३
४. तत्रैव ७/१७
५. तत्रैव ७/८
६. तत्रैव ७/१९, २७-२९
७. डॉ० के.पी. जायसवाल–हिन्दु राजतंत्र पृ० ३८०
८. मनुस्मृतिः ७/१९, २८
९. तत्रैव ७/११२
१०. श्रीचन्द्रश्वर–राजनीतिरत्नाकर प्रस्तावना पृष्ठ १०
११. डॉ० के.पी. जायसवाल–हिन्दू राजतंत्र पृ० ३८३

सम्राट् भवति यो वै राजधर्मक्षेत्राद् बहिः किमपि कर्त्तुं लेशमपि नाधिकृतो न चासौ राजधर्मं निर्ममे, परमेते राजनियमा सृष्टयादितः परम्परया प्रचलिता आगताः।'[१]

डॉ० के.पी. जायसवालोऽपि मतमिदमेव मनुते। स लिखति, 'हिन्दुसिद्धान्त एकराड्विषये लोकमध्ये नैतादृशः च्यावितो यदयमेकराजत्वं दिव्यरूपं गृहीत्वा स्वेच्छाचारितायां विपरिणमेत्।' 'अहं ब्रह्मास्मि' इति मत्वा स्वयमात्मानं ब्रह्मरूपेणानुभूय स्वैरित्वं कर्त्तुमपि हिन्दुराज्ञे नासीत् सम्भाव्यम्। यतो हि राष्ट्रमपि सावधानतया ब्राह्मणत्वं राज्यशासकस्य पदेन सह सम्मेलितुं नैच्छत्। हिन्दुराज्ञो दण्डः कदापि यो मायाजालिकस्य करस्थितदण्डतां प्राप्तुं नाशकत् तस्य कारणमिदमेवासीत् यन्नृपस्य शासनसम्बन्धिनोऽधिकारविषयो वस्तुतो याज्ञिकानां ब्राह्मणादीनां चाधिकारक्षेत्राद् बहिरेव सदासीत्।[२] न केवलं मनुरपितु राजशास्त्रस्य प्राचीनाः प्रणेतारोऽपि राज्यस्य शासनं शक्तिसम्पन्नं प्रतिभापूर्णं तु समैच्छन् किन्तु निरङ्कुशतां शासनादौ न कदापि वाञ्छन्ति स्म। ते नृपस्याधिकारान् न तथा गणयामासुर्यथा तस्य कर्त्तव्यानि। एतच्चोपर्युक्तेन विवेचनेन स्पष्टं भवति। सत्यमेतत् यत्प्राचीनसमये संविधानजनिता- न्याधुनिकानि नियन्त्रणानीव नैवासन्, तथापि नृपस्य स्वैरिता सफलतापूर्वकं नियन्त्रितासीत्।

सर्वप्रथमं प्राधान्येनेदं स्थापितं यद्राज्ञा धर्मेण शास्त्रानुसारेण शासितव्यम्। मनुः स्मरति, 'यो नृपो राजधर्मेण सर्वं कर्मावलोकयति तमनु सर्वा प्रजा तथैव याति यथा नद्यः समुद्रम्।'[३] अनेनैव नियमेन राज्ञो वास्तविकं स्वरूपं स्पष्टतामेति। यतो हि शास्त्राणि न कदापि निरङ्कुशतामत्याचारं वा समर्थयन्ति। धर्मः सदैव स्वेच्छाचारिताया मार्गे महती बाधा बभूव। एवमेव राजा सदाचारसम्पन्नो भवेदिति प्राधान्येन निरूपितमपेक्षितं च। सत्पथमनुसरति, न कुपथे प्रवर्त्तते राजेति मन्त्रिणो, मित्राणि तदनुयायिनश्च सावधानतया व्यलोकयन् कुपथान्यवारयन् यदि तं तथाभूतमपश्यन्। एतस्यां प्राचीनायां व्यवस्थायां विचारयन्ती डॉ. प्रेमकुमारी दीक्षितमहोदया लिखति, 'धर्मो हि नृपापेक्षया श्रेष्ठत्वमभजत्। राजा तु केवलं धर्ममर्यादा अरक्षत्। स न तु धर्मे परिवर्त्तनं कर्त्तुं क्षमते स्म न च तं धर्ममतिक्रमितुं कल्प आसीत्। नृपतेः प्राशासकीयाश्शक्तयश्चात्यन्तं सीमिता आसन्। स केवलं निर्धारितं करमेव ग्रहीतुं समर्थोऽभूत्। धर्मानुसारं च दण्डं दातुं क्षमोऽभवत्। स्वेच्छापूर्वकमनिर्धारितं दण्डं प्रयोक्तुं न तस्याधिकारो बभूव। ब्राह्मणानां मतं स स्वीचकार। ब्राह्मणाश्च स्वविद्याबुद्धिप्रभावेण राजानं मर्यादायां रक्षन्ति स्म।

---

१. डॉ० श्यामलाल पाण्डेय–जनतन्त्रवाद रामायण और महाभारतकालीन पृष्ठ १७

२. डॉ० कें.पी. जायसवाल–हिन्दू राजतंत्र पृ० १०८-९

३. मनुस्मृतिः ८/१७५

मनोर्मते नृपतिना श्रेष्ठानां ब्राह्मणानां सेवकेन, तेषामाज्ञाकारिणा च भवितव्यम्।[१] अन्यत्रैकस्मिन्स्थले तेनोक्तं, 'ब्राह्मणः सर्वदा पूज्यो यतो हि सः पृथिव्यां श्रेष्ठो देवः (भूदेवः)–अस्ति। स मनुते यत्क्षत्रियाणां शास्ता ब्राह्मण एव भवितुमर्हति।

यो हि नृपतिः स्वदायित्वानां निर्वाहं सम्यक् न करोति स हि पापभाग्भवति, निरयं च याति। मनुः स्मरति, 'ये न प्रजा रक्षन्ति, परं ताभ्यः करमवश्यमेव गृह्णन्ति, ते नृपाः सर्वेषां जनानां समस्तानां पापानां भागिनो भवन्तीति महर्षयो ब्रुवते।'[२] शास्त्रमर्यादानामवमन्ता, नास्तिको, वृथादण्डादिना धनापहर्त्ता, रक्षां न कृत्वा प्रजानामर्थांशं भोक्ता च राजाऽधोगतिं प्राप्नोति। मनुर्विश्वसिति, 'दैवीं सम्पदमभिजातो हि नृपतिर्न तु पापं भजते नैव च निरयं गच्छति।'

महाभारतेऽन्येषु च प्राचीनेषु ग्रन्थेषु इतोऽन्यापि व्यवस्था कृता दृश्यते। डॉ० प्रेमकुमारी दीक्षितमहाशया लिखति, 'महाभारते केवलं नैतिकताया आध्यात्मिकतायाः प्रशंसामेव कृत्वा स्वकर्त्तव्यं नैव समाप्तमपि तु नृपेर्निरङ्कुशे जाते तस्य दमनार्थमुपाया अपि परिगणिताः भीष्मो वामदेवमुद्धृत्य कथयति यद् यो हि नृपो धर्मं नाशयति स हि वधार्हो भवति। स्वेच्छाचारी नृपः समग्रायाः पृथिव्या राज्यं प्राप्यापि नश्यति। तन्मते रक्षामकुर्वाणो राजा तथैव त्याज्यो भवति यथा समुद्रयात्रायां त्रुटिता नौका त्याज्या भवति। एतत्सर्वं वर्णयतोऽपि तस्य निष्कर्षस्तु तदेवासीत् यत् साधारणतः राजानः संवैधानिका एवासन्। ते शास्त्राज्ञानां लोकधर्मस्य च पालनमकुर्वन्। जनमतं च सममानयन्। तान् स्वैरिणो निरङ्कुशांश्च वक्तुं कथमपि नोचितम्।' अद्यापि राष्ट्रसंविधानं सर्वेषां कृते समानमस्ति राष्ट्रपतिः स्यात् सामान्यो वा जनः। मन्त्रिणामधिकारिणाञ्च कृतेऽपि विधानानि सन्ति, तान्यनुसृत्यैव ते स्वाधिकारोपयोगं कुर्वन्त्विति सर्वे संविधानरक्षणस्य शपथं विद्धति। अद्य राजा नास्ति किन्तु मन्त्रिणः सन्ति यथा मनुदिशा पुरा राजा प्रजाकल्याणं कुर्वन्नासीत् तथैवाद्यापि ते कुर्युरिति सर्वात्मनोचितम्। एतेन लोकतन्त्रेऽपि निर्वाचिता नेतारो न स्वैरितां कर्तुमर्हन्ति। यथा पुरा राजानः धर्मशास्त्रनियमानुलङ्घ्य शासनं कर्तुमनधिकृतास्तैवाद्यापि संविधानमतिक्रम्य कश्चिन्मन्त्री राष्ट्राध्यक्षो राज्यपालोऽधिकारी वा न समर्थः। अतो मनो राज्यशासनादर्शा अद्यापि न स्वमहत्त्वं जहति। मनोः सामान्यधर्मघटकास्तु–अद्यापि न केवलं भारतराष्ट्रायापितु विश्वस्मै प्रासङ्गिकाः सन्ति ते चैवम्–

---

१. मनुस्मृतिः ७/३७-३८

२. तत्रैव ७/१११

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।[१]

मन्धातोरेव मननशीलप्राणिनोऽभिधानरूपाः—मनुः, मनुष्यः, मानवः मैन प्रभृति शब्दाः सन्ति, एतैः शब्दैः संबोधिताः सर्वे सामान्यधर्मघटकानुसारिणः स्युरित्युचितम्। येषु नैते धर्मघटका सन्ति, तान् तु भर्तृहरिः पशून् वक्ति—

आहारनिद्राभयमैथुनञ्च सामान्यमेतत्पशुभिर्नराणाम्।
धर्मो हि तेषामधिकोविशेषो धर्मेण हीनाः पशुभिः समानाः।।[२]

---

१. मनुस्मृतिः ६/९२
२. नीतिशतकम्

# संस्कृते स्मृतिपरम्परायां "पाराशरः"

डॉ० श्रीमती कृष्णा जैन

संस्कृतवाङ्मयस्य वैशद्यमियत्तया परिछेत्तुमतीव दुष्करम्। अस्मिन् लघुतरे सन्दर्भे तु खलु तदतिशयं दुष्करमित्यत्र नाणीयानपि सन्देहः। परमर्षिभिः शास्त्रंकृद्भिर्लोकानुजिघृक्षया धर्मार्थकाम - मोक्षेति तत्त्वचतुष्ट्यं परमपुरुषार्थत्वेन निर्दिष्टम्। तदेतद् विशदीकरणार्थं तत्त्ववेत्तृभिः धर्मशास्त्रं, अर्थशास्त्रं, कामशास्त्रं, मोक्षशास्त्रञ्चेति शास्त्रचतुष्टयं प्रणीतम्।

एषु शास्त्रचतुष्टयेषु धर्मशास्त्रं सर्वेषां शास्त्राणामाधारभूतम्। यद्यपि धर्मशास्त्रस्याविर्भावस्तु सुदूरप्राचीनकाल एव सञ्जातः किन्तु तस्य लिखितरूपः वैदककालात् प्राप्यते। वेदाङ्गेष्वन्यतमानां किल सूत्राणां मध्ये धर्मसूत्राणामतीव विशिष्टं पदम्। तेषु धर्मसूत्रे आचार-व्यवहार-प्रायश्चित्तेति विषयत्रयं प्राधान्येनोपन्यस्यते। धर्मसूत्रस्य आचाराधिकरणे वर्णाश्रमधर्मोपदेशस्य विशदं प्रतिपादनम्। व्यवहारखण्डे च राजप्रजाधर्माणां विवरणम्। प्रायश्चितीयप्रकरणे च पुनः ज्ञानाज्ञानकृतानां पापानां पातकानाञ्च निराकरणाय विविधप्रायश्चितानां विधानं पल्लवितं भवति। यद्यपि नैषः नियमः सार्वत्रिकस्तथापि भूम्ना इमे एव विषयाः अनुशास्यन्ते धर्मशास्त्रमङ्गेणेति।

यद्यपि स्मृतिग्रन्थाः सन्ति भूयांसः। तेषां संख्या प्रायशः पञ्चाशत्संख्यामतिक्रमते। तद्यथा—मनुस्मृतिः, नारदस्मृतिः, अत्रिस्मृतिः, विष्णुस्मृतिः, दक्षस्मृतिः, आङ्गिरसस्मृतिः, शातातपस्मृतिः, पाराशरस्मृतिः, बृहत्पाराशरस्मृतिः, लघुहारीतस्मृतिः, बृद्धहारीतस्मृतिः, याज्ञवल्क्यस्मृतिः, कात्यायनस्मृतिः, आपस्तम्बस्मृतिः, लघुशङ्खस्मृतिः, शङ्खस्मृतिः, वशिष्ठस्मृतिः, औशनसस्मृतिः, व्यासस्मृतिः, प्रजापतिस्मृतिः, आश्वलायनस्मृतिः, बौधायनस्मृतिः, प्रजापतिस्मृतिः, गौतमस्मृतिः, बृद्धगोतमस्मृतिः, यमस्मृतिः, अरुणस्मृतिः, पुलस्त्यस्मृतिः, काश्यपस्मृतिः, व्याघ्रपादस्मृतिः, देवलस्मृतेश्चात्याद्याः।

स्मृतिशब्दस्य प्रयोगः शङ्कराचार्येण व्यापक अर्थेन कृतम्। शङ्कराचार्यानुसारेण स्मृतिपदेन वेदवाङ्मयातिरिक्तं, पाणिनीयव्याकरणश्रोत्रसूत्र-गृह्यसूत्र-धर्मसूत्र-महाभारतादीनामपि ग्रहणं स्वीकृतम्। शङ्कराचार्यः "पाणिनिस्मृतिरिति" उक्त्वा स्थाने स्थाने अस्य स्मृतित्व व्यपदेशनं कृतवान्। संकुचितार्थेन

स्मृतिशब्देन धर्मसूत्राणां मनुस्मृतीनां ग्रहणं स्वीक्रियते। अत्र धर्मशास्त्रं स्मृतिपदं च एकार्थकबोधकं मन्यते।

महाराजमनुः स्वयमपि स्मृतिं धर्मशास्त्रम् अभिव्यनक्ति–

**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।**
**ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्वभौ।।**[१]

गौतमेन प्रतिपादितम्–

**स्मृतिधर्मशास्त्राणि तेषां प्रणेतारो मनुविष्णुयाज्ञवल्क्यादयः।**

मनुः उच्चैः उद्घोषयति[२]–

**वेदोऽखिलो धर्ममूलम्** मनुस्मृतेः प्रसिद्धः टीकाकारः मेघातिथिः कथ्यते–

**अनुभूतार्थविषयं विज्ञानं स्मृतिरुच्यते।**[३]

सम्पूर्णभारतीयपरम्परायां स्मृति–समानार्थकं धर्मशास्त्रेन ईदृशं विविधधर्मेषु प्रणीतम्। जैनसंस्कृतावपि मूलाचारः, रत्नकरण्डश्रावकारः प्रभृतयो नैके ग्रन्थाः, बौद्धसंस्कृतौ च विनयपिटकग्रन्थाः एतादृश एव सन्ति। समस्तशास्त्रिषु पराशरो नाम महातपस्वी प्रथितनामा महर्षिः ख्रीष्टाब्दस्य प्रथमपञ्चशताब्दिमध्ये प्रादुर्भूतः। सुप्रसिद्धेतिहासग्रन्थमहाभारतेन ज्ञायते यदसौ महाभागः ब्रह्मर्षिः वशिष्ठस्य पौत्रः शक्तेश्च पुत्रः आसीत्। स्वयमपि महर्षिः व्यासस्य जनकः आसीत्।

**पाराशरस्मृतिः –**

स्मृतीनां गणनायां याज्ञवल्क्यस्मृतेरनन्तरं कलौ पाराशरस्मृतेर्मान्यता जोघुष्यते–

**"कलौ पाराशरस्मृतः" इति**

कलियुगे पाराशरस्मृतेः महत्वमनुभूय माधवाचार्यापरनामधेयेन श्रीविद्यारण्यस्वामिना पाराशरमाधवाभिधं चतुर्दशशताब्द्यां विशदं प्रामाणिकञ्च भाष्यं विरचितम्। पाराशरस्मृतिरियं द्वादशभिरध्यायैरुपनिबद्धा। अध्यायानुसारमस्य विषयवस्तु अधस्ताद् प्रस्तूयते–

---

१. मनु० स्मृ० - २/१०
२. मनु० स्मृ० - २/१६
३. मनु० स्मृ० - २/६ की टीका

१. षड्कर्मणा ब्राह्मणेभ्यः सौख्यलाभः, अतिथिसत्कारस्य फलं, सामान्यतया च वर्णचतुष्टयस्य कर्तव्याः।

२. कलियुगे गृहस्थस्य आवश्यककर्माणां सामान्यविवेचनम्।

३. जन्म-मरणस्य, अशौचस्य शुद्धेः विश्लेषणम्।

४. अतिमानेन अतिक्रोधेन वा मृतानां स्त्रीपुरुषाणां दाह, दाहकर्मे प्रायश्चितम्, तप्तकृच्छ्रस्य लक्षणम्, परिवेदनादिदोषस्य विचारः।

५. वृकोदर - श्वानादिभिर्दृष्टस्य परिशुद्धिः, चाण्डालादिभिः मारितस्य ब्राह्मणस्य देहस्पर्शे प्रायश्चितविधानं, अग्निहोत्रस्य च प्रवासे मरणे सति तस्य क्रियानिरूपणम्।

६. प्राणिनां हिंसायाः प्रायश्चितनिरूपणम्।

७. काष्ठादिभिर्निर्मिताणां पात्राणां शुद्धिविधानम्, रजस्वलास्त्री स्पर्शं कुर्याच्चेत्तर्हि तस्य प्रायश्चितप्रतिरूपणम्।

८. अनिच्छया बन्धनादौ, गवां मरणे तस्यापि प्रायश्चित-प्रख्यापनम्।

९. गौरक्षणभावनासत्यामपि बन्धनेन, अवरोधेन वा चेद् गावः मरणं स्यात् तर्हि तस्य प्रायश्चितनिरूपणम्।

१०. अगम्या गमने चतुर्वर्णेभ्यो यथायोग्यप्रायश्चितम्।

११. अशुद्धवीर्यादिभक्षणे प्रायश्चितम्, शूद्रान्नभक्षणे ब्राह्मणाय प्रायश्चितम्।

१२. विष्टामूत्रादिभक्षणे प्रायश्चितम्, ब्रह्महत्यायाः प्रायश्चितम्।

पुरा वैदिकयुगे विवाहावस्था गृहस्थाश्रमस्य योग्यता मनु प्रमाणिता। सावस्था क्रमशः वराय वध्वै च पञ्चविंशतिवर्षाणि षोडशवर्षाणि चाभिमता। स्मृतौ कन्यकानां विवाहावस्था स्वल्पीकृता। दशवर्षीया द्वादशवर्षीया वा कन्या परिणेयेति पराशरस्य मतम्।[१] गृहस्थानां जीवनविधिर्विविधप्रकारैर्भरैः पूर्णो विद्यते। एषां द्वारेण गृहस्थाः देवतां मानवतां च प्रति कर्त्तव्यं सम्पादितवन्तः।

---

१. परा० स्मृ० - १/८

वैदिककालादेव सदैवातिथियज्ञो लोकप्रियोऽभवत्। शिलोञ्छवृत्तिकोऽपि ब्राह्मणोऽतिथियज्ञं करोत्विति मनुना निर्दिष्टम्। अतिथिकालेऽकाले वागच्छेत् तस्मै भोजनं दातव्यमेव। शत्रु-अतिथिरपि सत्कारयोग्य: भवति। तथाहि अतिथिसत्कारं समर्थयन् पाराशर: प्राह–

**प्रियो वा यदि वा द्वेष्यो मूर्ख: पण्डित एव वा।**
**वैश्वदेवे तु सम्प्राप्त: सोऽतिथि: स्वर्गसंक्रम:।।**[१]

जना: स्वकार्येण इतस्तत: गच्छन्त: आगच्छन्त: वा भोजनवेलायां यत्र कुत्रापि भोजनं लभेरन्। अनेके ऋषयोऽपि देशभ्रमणकाले अतिथिरूपे स्वागतार्थं समुद्यता: आसन्। गृहस्था: अतिथियज्ञे विष्णुरूपमेवातिथिमागतं मत्वा तस्य सत्कारं कृतवन्त:।

बहव: स्मृतिकारा: जातिपरिवर्तनं अनुमन्यन्ते। पाराशरोऽपि तदैव समर्थयति–

**अग्निकार्यात् परिभ्रष्टा: सन्ध्योपासनवर्जिता:।**
**वेदं चैवानधीयाना: सर्वे ते वृषला: स्मृता:।।**[२]

अन्यत् च–

**स विश्वं विभर्ति।**[३]

अनेन उद्धरणेन पाराशरेण ब्राह्मणस्य उत्तरदायित्व निरूपितम्। वैदिककाले कृषिपशुपालनयोर्विशेषं महत्त्वं स्वीकृतम्। प्राय: सर्वे ब्राह्मणा: क्षत्रियाश्च कृषिपशुपालनं कुर्वन्ति स्म। परवर्तियुगेऽनयोर्द्वयोर्व्यव-साययोर्हीनत्वमेव निदर्शितम्। ब्राह्मणेभ्य: कृषि: निषिद्धा। किन्तु बहवस्तत्रासन् तादृशा: ब्राह्मणा: येषां विषये बौधायनो लिखति–

**प्राक् प्रातराशात्कर्षी स्यात्।**[४]

मनुस्तु ब्राह्मणेभ्य: कृषिवृत्तिं परित्याज्यां मन्यते।[५] ब्राह्मणास्तु परमुखापेक्षिणो भोजनार्थं न भवेयुरिति बहूनां मनीषिणां परिदर्शनमासीत्।[६] ब्राह्मणेभ्यो बलीबर्दा: दानरूपेण दीयन्ते स्म। न ते

---

१. परा० स्मृ० - १/४०
२. परा० स्मृ० - ११/२९
३. परा० स्मृ० - १२/५
४. बोधा० स्मृ० - २/२८२
५. मनु० स्मृ० - ४/५
६. परा० स्मृ० - २/२-१६

परमुखापेक्षिणो जीविकायै भवेयुरिति उद्दिश्य पद्मपुराणे स्पष्टं निर्दिष्टम्–"ब्राह्मणाः शस्त्रेण जीविकोपार्जनं कुर्वन्तु, व्यापारं कृषिं वा कुर्वन्तु किन्तु ब्राह्मणोचितां धार्मिकसंस्कृतिं मा त्यजन्तु।" पाराशरोऽपि अमुं सिद्धान्तं समर्थयति।

भिक्षावृत्तिर्दानग्रहणं च ब्राह्मणानां शाश्वतवृत्तिरभवत्। दानेन स्वर्गः सुलभः इति मत्वा ब्राह्मणेभ्यो दानाय सर्वे समुत्सुका बभूवुः। पराशरस्तु योग्यब्राह्मणेभ्यो दानं समर्थयति।[1] किन्तु व्रतहीनेभ्यो अनधीयानेभ्यो वा ब्राह्मणेभ्यो यदि कस्मिंश्चदपि ग्रामे भिक्षा दीयते तर्हि ग्रामस्तु चौरमेव भोजयति, पराशरस्तु अयोग्य ब्राह्मणेभ्यो दानं न समर्थयति–

**ब्राह्मणस्य मुखं क्षेत्रं निरूपमकंटकम्।**
**वापयेत् सर्वबीजानि सा कृषिः सर्वकायिका।।**

पाराशरस्तु दानस्य प्रतिष्ठाम् उद्घाटयन् तस्य विभिन्नभेदानां पर्यालोचनं कृतवान्। तद्यथा–

**अभिगम्योत्तमं दानमाहूयैव तु मध्यमम्।**
**अधमं याचमानाय सेवादानं तु निष्फलम्।।**[2]

उपर्युक्तनिदर्शनेन प्रतिभाति यत् पाराशरेण प्रणीतोऽयं मनुष्यजीवनविन्यासो नास्ति स्पृहणीयम्। अयं मार्गः परवर्तियुगेऽपि सिद्धान्ततः सर्वदा प्रतिष्ठितः। काणेमहोदयानुसारेण–

The writer on Dharmasastra meant but a mode of life on a code of conduct, which regulated a man's work and activities as a member of society and as an individual and was intended to bring about the gradual development of a man and to enable him to reach what was deemed to be the goal of human existence.[3]

इत्थम् अत्र संस्कृते स्मृतिपरम्परामाश्रित्य श्रीमतः पराशरस्य तस्य च कृतेः विषयवस्तु समीक्षात्मक- शैल्यां सोद्धरणं विश्लेषितम्। अत्र अस्माकं प्रतिपादनस्य अभिप्रायोऽयमस्ति यत्–संस्कृते स्मृतिपरम्परायां विशेषतः श्रीपराशराभिमते 'धर्मः' तादृक्कार्यव्यवस्थायाः ज्ञापकोऽस्ति यत्र समष्टिगतं वैयक्तिकञ्च जीवनं सम्यग् रीत्या अनुशासितं सौमनस्य समन्वितं च सञ्चलति। इति।

---

१. परा० स्मृ० - १/६६

२. परा० स्मृ० - १/६६

३. History of Dharmasastra Vol. II Part I, Page 2

# शास्त्रीयटीकासु गूढार्थदीपिकाटीकायाः वैशिष्ट्यम्

डॉ० रविशंकरशुक्लः

श्रीमद्भगवद्गीताशास्त्रं नहि सम्प्रदायविशेषानुगतान् सिद्धान्तान् प्रतिपादयितुं प्रवृत्तमपि तु तेषां सर्वेषां विशेषतो वेदान्तसम्प्रदायानामुपजीव्यत्वेनैव प्रतिष्ठितमिति; यच्चेदं प्रतिष्ठापितं, गीताशास्त्रे प्राचीनतमप्रस्थानानां समन्वयोऽवलोक्यते, सार्वजनीनानुभवात्मकं धर्मद्वयं सर्वपुरुषार्थसाधक-निष्ठात्रयञ्चोपद्दिश्य साक्षात्भगवदुक्तं निर्विचिकित्सं शुद्धं निष्पक्षमुदासीनं समस्ताग्रहनिग्रहनिरस्तं प्रतिव्यक्तिपरिनिष्ठतस्वभावानुकूलात्मानुशासनसदुपदेशपरं शास्त्रमिति; यच्चेदं प्रतिज्ञातं, तस्यैतादृशस्य शास्त्रस्य सर्वोत्कृष्टतया श्रद्धाभाजनं मधुसूदनाचार्यविरचिता व्याख्या विदुषां विचारपदवीमारोहति इति, तस्य सर्वस्य पूर्वोक्तस्य समर्थनायाधुना गूढार्थदीपिकाख्यटीकाया वैशिष्ट्यं किमपि वक्तव्यमिति।

तत्रादौ संक्षेपेण वैष्णवाचार्याणां सर्वसम्मतं गतं पुरस्क्रियते। पुरुषोत्तमजीकृतामृततरङ्गिणीमतम्–

"व्याख्यास्ये भगवद्गीतां भक्तिमार्गानुसारतः।"

तत्र गीताशास्त्रं किं परमिति पूर्वं विचार्यते। तत्र शङ्कराचार्याः।

"भगवान् सृष्ट्वेदं जगत् तस्य स्थित्यर्थं प्रवृत्तिलक्षणं धर्मं तन्निःश्रेयसार्थं निवृत्तिलक्षणं धर्मं च ग्राहयित्वा साम्प्रतं कलिधर्मेण धर्मेऽभिभूयमाने, तद्रक्षार्थं स आदिकर्ता नारायणाख्यो विष्णुः देवतायां वसुदेवांशेन किल सम्बभूव। स च भगवान् ज्ञानेश्वर्यशक्तिबलवीर्यतेजोभिः सदासंपन्नस्त्रिगुणात्मिकां मायां प्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् मायया देहवानिव जीववशाज्जात इव लोकनुग्रहम् कुर्वन् लक्ष्यते। स एव स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जनाय शोकमोहमहोदधौ निमग्नायोपदिदेश। तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसम्। तच्च सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम्। तच्च काम्यनिषिद्धत्यागपूर्वकात् परमेश्वरार्पणबुद्धया क्रियमाणाद्धर्मादबहुजन्माभ्यस्तात् क्रमेण भवति सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठा-रूपाद्धर्मात् शीघ्रं भवति। इमं द्विप्रकारं धर्मसाधनं निःश्रेयसं प्रयोजनम्। परमार्थतत्त्वं वासुदेवाख्यं च परं ब्रह्माभिधेयं साध्यभूतं विशेषतोऽभिव्यंजयद्विशिष्टप्रयोजनसम्बन्धाभिधेयवत् गीताशास्त्रमित्यूचुः तेन तन्मते

आत्मज्ञाननिष्ठारूपाद्विद्यात्मकाद्धर्मादुक्तरूपो मोक्षो भवति इति सिध्यति। तत्र विद्या सात्विकी अविद्या राजसतामसी, सत्त्वरजस्तमसां च परस्पराभिभावकत्वम्। 'रजस्तमश्चाभिभूय' इति वक्ष्यमाणवाक्यात्। अतो रजस्तमः क्रियमाणाभिभवनिवृत्यर्थं गुणत्रयनिवारकं साधनान्तरमन्वेष्टव्यम् भगवत्प्रतिरूपम्। तदत्र नोक्तमतो न्यूनमेतदवगंतव्यम्। न तु गीतायां भगवता ज्ञानस्य संन्यासस्य चोपदेशात्तत्रैव गीताया अपि तात्पर्यमिति शंक्यम्, पूर्वोक्तविस्मरणादर्जुनं प्रति क्रुद्धेन भगवता तावन्मात्रोपदेशात्। 'न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः। परं हि ब्रह्म कथितं योगयुक्तेन तन्मया' इत्यनुगीतारंभस्थवाक्येन तथावसायात्, अत्राप्यन्ते शरणगमनस्यैवोपदेशात्, न ज्ञाने वा संन्यासे तात्पर्यमिति दिक्। मधुसूदनसरस्वती तु निःश्रेयसे विशेषमाह–'सच्चिदानन्दरूपं तत्पूर्णं विष्णोः परं पदम्। यत्प्राप्तये समारब्धा वेदाः, काण्डत्रयात्मकाः' इति किञ्च 'कर्मोपास्तिस्तथाज्ञानमिति काण्डत्रयं क्रमात्। तद्रूपाष्टादशाध्यायी गीता काण्डत्रयात्मिका।। एकमेकेन षट्केन काण्डमात्रोपलक्षयेत्।।' इत्युक्त्वा प्रथमे षट्के कर्मनिष्ठा, द्वितीये भक्तिनिष्ठा, तृतीये ज्ञाननिष्ठा चोक्ता। ज्ञानकर्मणो इत्यन्तं विरुद्धत्वेन तत्समुच्चस्यानङ्गीकारात्प्रथमतृतीययोः काण्डऽत्रये विश्लेषः, उपासनारूपभगवद्भक्तिनिष्ठा तु मध्यानुगतत्वान्मध्यमेनोक्ता। किञ्च उपासनात्मिका भगवद्भक्तिस्त्रिविधाकर्म मिश्रा शुद्धा ज्ञानमिश्रा चेति। तत्राद्या प्रथमे षट्के कर्मत्यागमुखेन विशुद्धत्वम्पदार्थो निरूप्यते, द्वितीये षट्के भगवद्भक्तिनिष्ठावर्णनमुखेन भगवान्परमानन्दस्तत्पदार्थो निरूप्यते, तृतीये तु तयोरैक्यं वाक्यार्थः स्फुटं वर्ण्यत इति विशेषमाह। तदपि च न रोचिष्णु, तादृशवाक्यस्य तत्रादर्शनात्।

सर्वधर्मानिति वाक्ये यच्छरणपदं तत्तु 'शरणं गृहरक्षित्रोः' इति कोशात् तयोरन्यतरवाचकं सत् तादृशेऽर्थे लाक्षणिकतामापद्यते इत्यसंगतत्वात् श्रीधरस्तुसकललोकवंदितचरणः परमकारुणिको भगवान् श्रीदेवकीनन्दनः तत्त्वज्ञानविजृम्भित शोकमोहविभ्रंशितविवेकतया निजधर्मपरित्याग परधर्माभिसंधिपरमर्जुनं धर्मज्ञानरहस्योपदेशवलेन तस्माच्छोकमोहसागरादुद्धद्यार इत्येतावदुक्त्वा गीतायां च प्रायशो भगवदुक्ता एव श्लोकाः, उक्ता इति बोधनाय गीतामाहात्म्यं वाक्यमुक्तवान्।

**'गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः।**
**या स्वयं पद्मनाभस्य मुखपद्माद्विनिस्सृता।।'**

रामानुजाचार्यास्तु–'निरतिशयानवधिककल्याणगुणैकतानाऽनन्तज्ञानानन्दैकादिस्वरूपादि निखिलजगदु- दयविभवलयलीक्लातार्न्तनिखिलविशेषणविशिष्टः परब्रह्मभूतः पुरुषोत्तमो नारायणो ब्रह्मादि स्थावरान्तं निखिलं जगत् सृष्ट्वा स्वेन रूपेणावस्थितो भूभारावतारणोपदेशेनास्मदादीनामपि संसारदुःख-प्रशमनाय सकलमनुष्यनयनविषयागतः परापरनिखिलजनसंतापहराणि चेष्टितानि कुर्वन्

